## शेषे परेण युङ् न साकम् । ४ । ३५ ॥

अत्र वैतालीयाधिकारे यषां लकाराणां नियम उक्तस्तद्व्यतिरिक्तो लकारयण शेषस्तस्मिन्नियमः क्रियते—युग्लकारः परेण सार्कं न मिश्रीकर्तव्यः । द्वितीयस्तृतीयेन, चतुर्थं पञ्चमेन युक्पादे षष्ठश्च सप्तमेन। एवं वदता शेषाणां मिश्रीभावोऽप्यनुज्ञात[1]। अत्रोदाहरण पूर्वमेव ॥

## षट् चामिश्रा युजि । ४ । ३६ ॥

अत्र द्वितीयचतुर्थयो पादयो षट् लकारा अमिश्रा न कर्तव्याः । पृथग्[4] न प्रयोक्तव्या इत्यर्थं । प्रथमतृतीययोश्च पादयो स्वरुचि । तत्रोदाहरणं वैताळीये तावत्—

१ २ ३ ४ ५ ६ ८ ९ ११ १२ १३ १ २ ३ ४ ६ ७ ८ १ ११ १२ १३ १६
।–।–।–।–।–। ऽ–।– ।– ।–।–।–।–ऽ–।–।– –।– –।–ऽ
स–म–र–शि–र सि सु–भ्रु–ते द्वि–षां न–व–नि–शि–ता–यु–ध–दृ–ष्टि–र–प्र–त ।
१ २ ३ ४ ५ ६ ८ ९ ११ १२ १३ १ २ ४ ६ ७ ८ १ ११ १२ १४ १६
।–।–।–।–।–।–ऽ–।–ऽ–।–ऽ ।–।– – । ।– –।– –।–ऽ
कु–व–ल–य–द–ल–दी–र्घ–च–क्षु–षां प्र–म–दा–नां न क–टा–क्ष–वी–क्षि–तैम्[5]॥

औपच्छन्दसकस्योदाहरणम्—

१ २ ३ ४ ५ ६ ८ ९ ११ १२ १३ १६ २ ४ ६ ७ ८ १ ११ १२ १३ १६ १८
।–।–।–।–।–। ऽ–।– –।–ऽ– –ऽ –।–।– ।–ऽ ।–ऽ–
प–र–यु–व–ति–षु पु–न–र्मा–व–मा–दी दृ–ष्टा ग्रा–र्थे–य–त्वे त–र–त प ति–स्वम्।
१ २ ३ ४ ५ ६ ८ ९ ११ १२ १३ १६ २ ४ ६ ७ ८ १ ११ १२ १३ १६ १८
।–।–।–।–।–।–ऽ–।–ऽ ।–ऽ– –ऽ–ऽ–ऽ–।–।– –।– –। ।–ऽ
इ–द–म–प–र–मि–हो–प्य–ते सि–द्धे–पा–दौ–प–च्छ–न्द–स कं सु–ल–स पु तम् ॥

आपातलिकोदाहरणम्—

१ २ ३ ४ ५ ६ ८ ९ १ १२ १३ २ ३ ४ ६ ७ ८ १ ११ १२ १३ १६
।–।– ।–।–।–। ऽ–।–।–ऽ–ऽ ऽ–।–।–ऽ ।–।–ऽ–।–।–ऽ–ऽ
अ–मि–र–म–य–ति कि–न–र–क–ण्ठी ई–स–गा–सि ध–व–मा–य–त–ने–त्रा ।
१ २ ३ ४ ५ ६ ८ ९ १ १२ १३ १ २ ३ ४ ६ ७ ८ १ ११ १२ १३ १६
।–।–।–।–।–।–ऽ–।– ।–ऽ–ऽ ।–।–।–।– –।–।–ऽ ।–।–ऽ–ऽ
वि–घ–द–क–म–ल–को–म–ल–गा–त्री यु–व–ति–रि–य हृ–द–य त–रु–णा–नाम् ॥

## पञ्चमेन पूर्वः सार्कं प्राच्यवृत्ति[6] । ४ । ३७ ॥

इदानीं विशेषलक्षणमाह— शेषे परेण युङ् न साकम्' (पि सू ४।३५) इत्यत्र पञ्चमचतुर्थयोरेकीभावो निषिद्ध सोऽनेन विधीयते । 'युजि' इत्यनुवर्तते । यदा युक्पादे

---

१ 'व्यतिरेको' इति लि पु २ 'तत्र' इति लि पु ३ 'पूर्वोक्तमेव' इति लि पु ४ 'न पृथक्' इति लि पु ५. 'कटाक्षवीक्षितैः' इति लि पु ६ 'वैतालीयप्राच्यवृत्ति, औपच्छन्दसकप्राच्यवृत्ति, आपातलिकाप्राच्यवृत्ति' इति भेदत्रयमुपलभ्यते छन्द कौस्तुमादौ

पञ्चमेन लकारेण पूर्वं संगच्छते तदा 'प्राच्यवृत्ति.' नाम वैतालीयं भवति । शेषं यथा-प्राप्तम् । तत्रोदाहरणम्—

१ २ ४ ५ ६ ८ ९ ११ १२ १४. २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
। – । – ऽ – । – । – ऽ – । – ऽ – । – ऽ ऽ – । ऽ – । । । – ऽ – । – ऽ – । – ऽ,
वि–पु–ला–र्थ–सु–वा–च–का–क्ष–रा. क–स्य ना–म न ह–रन्ति मा–न–सम् ।
१ २ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
। – । – ऽ – । – । – ऽ – । – ऽ – । – ऽ ऽ – । – ऽ – । – । – । – ऽ – । – ऽ – । – ऽ,
र–स–भा–व–वि–शे–ष–पे–श–ला. प्रा–च्य–वृ–त्ति–क–वि–का–व्य–सं–प–द ॥

## अयुक्तृतीयेनोदीच्यवृत्तिः । ४ । ३८ ॥

'पूर्वः साकम्' इत्यनुवर्तते । अयुक्पादे तृतीयेन लकारेण यदि पूर्वः संगच्छते तदा 'उदीच्यवृत्ति'[1] नाम वैतालीयम् । शेषं यथाप्राप्तमेव । तत्रोदाहरणम्—

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० १२ १३ १४ १६
। – ऽ – । – । – । – ऽ – । – ऽ – । – ऽ । – । – ऽ – ऽ । । – ऽ – ऽ – । – । – ऽ,
अ–वा–च–क–म–नू–र्जि–ता–क्ष–रं श्रु–ति–दु–ष्टं य–ति–क–ष्ट–म–क्र–मम् ।
१ ३ ४ ५ ६ ८ ९ ११ १२,१४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६
। – ऽ – । – । – । – ऽ । ऽ – । – ऽ । – । – ऽ – ऽ – । – । – ऽ – । – ऽ – । – ऽ,
प्र–सा–द–र–हि–तं च ने–ष्य–ते क–वि–भि का–व्य–मु–दी–च्य–वृ–त्ति–भि ॥

## आभ्यां युगपत्प्रवृत्तकम् । ४ । ३९ ॥

आभ्यां पूर्वोक्तलक्षणाभ्या युगपत्प्रवृत्ताभ्या 'प्रवृत्तकं'[3] नाम वैतालीयम् । युक्पादे पञ्चमेन पूर्व. संगच्छते, अयुक्पादे तृतीयेन द्वितीय इत्यर्थ. । तत्रोदाहरणम्—

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
। – ऽ । – । – । ऽ – । – ऽ – । – ऽ ऽ – । – ऽ । – । – । – ऽ – । – ऽ – । – ऽ,
इ–दं भ–र–त–वं–श–भू–भृ–तां श्रू–य–ता श्रु–ति–म–नो–र–सा–य–नम् ।
१ ३ ४ ५ ६ ८ ९ ११ १२,१४. २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
। – ऽ – । – । – । – ऽ । – ऽ – । – ऽ ऽ – । – ऽ – । – । – । – ऽ । – ऽ – । – ऽ,
प–वि–त्र–म–धि–कं शु–भो–द–यं व्या–स–व–क्र–क–थि–तं प्र–वृ–त्त–कम् ॥

## अयुक्चारुहासिनी । ४ । ४० ॥

यस्य सर्वे पादा अयुग्लक्षणयुक्तास्तद्वैतालीयं 'चारुहासिनी'[4] नाम । किं तल्लक्षणं चतुर्दशमात्रत्वं तृतीयेन पूर्वस्य योग । तत्रोदाहरणम्—

१ ३ ४ ५ ६ ७ ८ ११ १२ १४ १ ३ ४ ५ ६ ८ ९ ११ १२ १४
। – ऽ – । – । – । – ऽ – । – ऽ – । ऽ, । – ऽ – । – । – । – ऽ – । – ऽ – । – ऽ
म–ना–क्प्र–स्र–त–द–न्त–दी–धि–ति' स्म–रो–ल्ल–सि–त–ग–ण्ड–म–ण्ड–ला ।

---

१ अस्यापि 'वैतालीयोदीच्यवृत्ति , औपच्छन्दसकोदीच्यवृत्ति , आपातलिकोदीच्य-वृत्ति' इति भेदत्रयमुपलभ्यते तत्रैव २. तद् उदीच्यवृत्तिः' इति लि. पु. ३. 'वैताली-यप्रवृत्तम्, औपच्छन्दसकप्रवृत्तम्, आपातलिकाप्रवृत्तकम्' एवं त्रिविधं छन्द कौ-स्तुभादौ. ४. तथैव चारुहासिन्यपि त्रिविधा.

१ २ ३ ४ ५ ६ ८ ९ ११ १२ १३　१ २ ३ ४ ५ ६ ८ ९ ११ १२ १३
I-S-I-I-I-S I -I-S　I-S I-I-I S-I-S-I-S
क-च-स-ञ्छ-छि-ता तु का-मि-नी म-नो ह-र-ति चा-रु-हा-सि-नी ॥

## युगपरान्तिका । ४ । ४१ ॥

युग्मलक्षणयुक्तेष्वतुर्भि पादै 'अपरान्तिका' नाम वैतालीयम् । किं तल्लक्षण षोडशमात्रत्व पञ्चमेन पूर्वस्य योग षष्ठ्यां मिश्राणां प्रयोगश्च । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ ११ १२ १३ १६　१ २ ३ ४ ५ ६ ८ ९ ११ १२ १३ १६
I-I-I-S-I-I-I-I-S- I-S-I-S　I-I-I-S-I-S-S I-S-I-S
स्थि-र-वि-ला-स-न-त-मौ-क्ति-का-व-ली क-म-ल-को म-लां-ह्री मृ-गे-क्ष-णा ॥
१ २ ३ ४ ५ ६ ७ ८ ९ ११ १२ १३ १६　१ २ ३ ४ ५ ६ ७ ८ ९ ११ १२ १३ १६
I-I-I S-I I-I-S I S-I-S　I-I-I-I-I-I-I-S-I-S-I-S
ह-र-ति क-स्य हृ-द-यं न का-मि-न सु-र-त-के लि-कु-श-ला-प-रा न्ति-का ॥

अपरस्यान्तिके समीपे स्थिता । परकीयेत्यर्थः ॥

इति वैतालीयाधिकारः ।

## गन्ता द्विर्वसवो मात्रासमकं लू नवमः । ४ । ४२ ॥

वैतालीयम्— (पि॰ सू॰ ४ । ३२) इत्यादिसूत्रात्सम्बन्ध्यन्त 'पाद'ग्रहणमनुवर्तते । 'ल्' इति च महानधिकार । तेनायमर्थः—यत्र पादे गन्ता सन्त, षोडश लकारा भवन्ति तत् 'मात्रासमकं' नाम छन्द । अन्ते द्वाभ्यामेको गुरु (S) कर्तव्य । नवमश्च लकार (I) एव । 'द्विर्वसवः' इति द्विगुणिता वसव लकारा षोडशेत्यर्थ । शेषे परेण युक् न साकम्' (पि॰ सू॰ ४।३५) इत्यनुवर्तनीयम् । तत्रोदाहरणम्—

२ ४ ५ ६　९ १ १२ १३ १६　२ ४ ६ ८ ९ १ १२ १३ १६
S-S-I-I-S I-I-S-S-S, S-S-S-S I-I-S-S-S
अ-स्त-भु-यु-गो वि-र-चि-र्दे-हे- गं-भी-रा-क्षो नै-स-ना-सा-प्र ।
२ ४ ५ ६ ८ ९ १ १२ १३ १६　२ ४ ५ ६　९ १ १२ १३ १६
S-S-I-I-S I-I-S S-S S-S-I-I-S I-I-S S-S
नि-र्मो-स-ह-नु स्फु-टि-ते के-की-र्मा-त्रा-स-म-कं स-म-से दुः-खम् ॥

'गन्त— (पि॰ सू॰ ४ । ३२ ) इत्यनेनैवान्तस्य गुरुत्वे सिद्धे पुनर्गन्तग्रहणमातिदेशिकगुरुत्वनिवारणार्थम् । तेनात्र द्वौ लकारौ (II) असङ्गतौ द्विमात्रिको गुरुः (S) क्रियत इति वाक्यशेषः ॥

---

१ अपरान्तिकापि त्रिधोपलभ्यते तत्रैव २ 'तद्युग्मलक्षणम्' इ लि पु ३ सि तविलासरसोक्तिपेशला इति लि पु ४ कोमलमुखी इति लि पु ५ छन्दःकौस्तुभवृत्तरत्नाकरादिग्रन्थेषु नव वैतालीयभेदा उपलभ्यन्ते परंत्वत्र तेष्वेकतमो 'दक्षिणान्तिका' इतिनामा भेदो नोपलभ्यते इयमप्यपरान्तिका पूर्वमभिहितैव तत्रोपलभ्यते ६ 'मात्रासमकं नवमो ल् गोऽन्त्य इति वृ॰ र॰ ७ मितनासाग्र' इति कलिकाता मुद्रितपुस्तके, 'भलनासाग्र' इति लिखितपुस्तके च ८ 'अन्त्यस्य' इति लि॰ पु॰

## द्वादशश्च वानवासिका । ४ । ४३ ॥

यस्य मात्रासमकस्य पादे द्वादशो लकार (।) स्वरूपेणावतिष्ठते चकारान्नवमश्च, तन्मात्रासमकं 'वानवासिका' नाम । तत्रोदाहरणम्—

२ ३ ४ ६ ८ ९ १० ११ १२ १४ १६ १ २ ३ ४ ६ ७ ८ ९ १० ११ १२ १४ १६
ऽ–।–।–ऽ–ऽ–।–।–।–।–।–ऽ–ऽ, ।–।–।–।–ऽ–।–।–।–।–।–।–।–ऽ–ऽ,
म–न्म–थ–चा–प–ध्व–नि–र–म–णी–य सु–र–त म-हो-त्स-व-प-ट–ह–नि-ना-द ।
१ २ ४ ६ ८ ९ १० ११ १२ १४ १६ २ ३ ४ ६ ८ ९ १० ११ १२ १४ १६
।–।–ऽ–ऽ–ऽ–।–।–।–।–ऽ–ऽ, ऽ–। ।ऽ–ऽ–।–।–।–। ऽ–ऽ,
व–न–वा–स–स्त्री–स्व–नि–त–वि–शे–ष क–स्य न चि–त्तं र–म–य–ति पुं–स ॥

## विश्लोकः पञ्चमाष्टमौ । ४ । ४४ ॥

द्वादशग्रहणं नवमग्रहणं च निवृत्तम् । यत्र चतुर्षु पादेषु पञ्चमाष्टमौ लकारौ (।) तिष्ठतः, शेषं यथाप्राप्तम्, तन्मात्रासमकं 'विश्लोको' नाम । तत्रोदाहरणम्—

२ ४ ५ ६ ७ ८ १०. १२ १४ १६ २ ३ ४ ५ ६ ७ ८ १० ११ १२ १४ १६
ऽ–ऽ–।–।–।–।–ऽ ऽ–ऽ–ऽ, ऽ–।–।–।–।–।–।–ऽ–।–।–ऽ–ऽ,
आ–त–गुं–ण–र–हि–तं वि–श्लो–कं दु–र्न–य–क–र–ण–क-द–र्थि–त–लो–कम् ।
२ ४ ५ ६ ७ ८ १० ११ १२ १४ १६ २ ४ ५ ६ ७ ८ १० ११ १२ १४ १६
ऽ–ऽ ।–।–।–।–ऽ–।–।–ऽ–ऽ, ऽ–ऽ ।–।–।–। ऽ–।–।–ऽ–ऽ,
जा–तं म–हि–त–कु–ले–ऽप्य–वि–नी–तं मि–त्रं प–रि–ह–र सा–धु–वि–गी तम् ॥

## चित्रा नवमश्च । ४ । ४५ ॥

यस्य नवमो लकार (।) एवावशिष्यते चकारात्पञ्चमाष्टमौ च, तन्मात्रसमकं 'चित्रा' नाम । तत्रोदाहरणम्—

१ २ ४ ५ ६ ७ ८ ९ १० १२ १४ १६ २ ४ ५ ६ ७ ८ ९ १० ११ १२ १४ १६
।–। ऽ–।–। ।–।–।–।–ऽ–ऽ–ऽ, ऽ–ऽ ।–।–।–। ।–। ।–ऽ–ऽ–ऽ,
य–दि वा–ञ्छ–सि प–र–प–द–मा–रो–ढुं मै–त्रीं प–रि–ह–र स-ह व–नि-ता भि ।
२ ३ ४ ५ ६ ७ ८ ९ १० १२ १४ १६ २ ४. ५ ६.७. ८ ९.१० १२ १४ १६
ऽ–।–। ।–।–।–। ।–।–ऽ–ऽ–ऽ, ऽ–ऽ ।–।–। । ।–।–ऽ ऽ–ऽ
मु–ह्य–ति मु–नि–र–पि वि–ष–या–स–क्ता–श्चि-त्रा भ-व ति हि म–न–सो वृ-त्तिः ॥

'नवम '(पि०सू०४।४२) इत्यनुवर्तमानेऽपि पुनर्नवमग्रहणमुपचित्राप्रतिप्रसवार्थम् ।

## परयुक्तेनोपचित्रा । ४ । ४६ ॥

परयुक्तेन दशमेन सहैकीभूतेन नवमेन 'उपचित्रा' नाम भवति । पूर्वं लघुनियमेन लक्षणं प्रोक्तम् । इदं तु गुरुनियमेनोच्यते । तत्रोदाहरणम्—

---

१. 'तद्युगलाद्वानवासिका स्यात्' इति वृ० र०. २. 'जो लनावथाम्बुधे विश्लोकः' इति वृ० र०. ३ 'वाणाष्टनवसु यदि लश्चित्रा' इति वृ० र० ('चित्रा नाम च्छन्दश्चित्रं चेत्त्रयो वा यकरौ' इति च्छन्दोमञ्जर्यादिषूपलब्धं चित्रा चित्रं वा च्छन्दस्त्वन्यत् ) ४. 'उपचित्रा नवमे परयुक्ते' इति वृ० र० ( अर्धसमवृत्तान्तर्गतोपचित्रनामकं छन्दस्त्वितोऽन्यत्. )

२ ४ ६ ७ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ ९ ११ १२ १४ १६
ऽ–ऽ– ।–।– –।–।– –। ऽ– – –।–।– –।–।–ऽ
य–थि–तं गु–रु–स–फ–गु–रा– ई थि–या–न्मा–स–म–हा–न्म–स–न प ।
२ ४ ६ ७ ८ ९ ११ १२ १४ १६ २ ३ ४ ६ ७ ८ ९ ११ १२ १४ १६
ऽ–ऽ –।।–ऽ–।–ऽ–ऽ– ।–।–।– –।–।– ऽ–।–।–ऽ–
पृ–थ्वी त–स्य गु–णै–रु–प–थि–या प–न्द्र–म–री–थि–नि–भे–भ–य–सी–यम् ॥

एभि' पादाकुलकम् । ४ । ४७ ॥

एषां पद्यानां मध्ये यैः कैश्चिदपि चतुर्भिः पादैः 'पादाकुलकं' नाम ।

मात्रासमकश्लोकवानवासिकोपचित्राणां पादैरुदाहरणम्—

१ २ ४ ६ ७ ८ ९ १ ११ १२ १४ १६ २ ४ ५ ६ ७ ८ ९ ११ १२ १४ १६
।–।–ऽ– –।–।–।–।–।–।– –ऽ – ।–।–।–।– –।–।––
स–ङ्गि–या–चा–लि–त–पि क–लि–त–चू–ते का–ले म–द–न–स–मा–ग–म–दू–ते ।
२ ४ ६ ८ ९ १ ११ १२ १४ १६ २ ४ ५ ६ ८ ९ ११ १२ १४ १६
ऽ– – ।–।–।–।–ऽ– ऽ– –।–।–ऽ –।–। ऽ–ऽ
स्व–स्था का–न्तां प–री–हृ–त–मा–यं पा–दा–कु–ल–कं था–व–ति पा–न्थः ॥

तथा विश्लोकोपचित्रामात्रासमकोपचित्राणां पादैः 'पादाकुलकम्' । तत्रोदाहरणम्—

२ ४ ५ ६ ७ ९ ११ १२ १४ १६ २ ३ ४ ५ ६ ७ ९ ११ १२ १४ १६
ऽ– – ।– ।–।–।–ऽ–।–।–ऽ– –।–।–।–।– –ऽ–।–।–ऽ–ऽ
पु–स्को–कि–ल–कू–त–घो–म–न–गी–ते द–क्षि–ण–प–व–न–प्रे–रि–त–धी–ते ।
१ २ ३ ४ ६ ८ ९ १ १२ १४ १६ २ ४ ५ ६ ८ ९ ११ १२ १४ १६
।–।–।–।–ऽ– ऽ–।–।– –ऽ–ऽ– –ऽ–।–।– ऽ–।–। ऽ–ऽ
म–धु–स–म–ये–ऽस्मि–न्न–त–वि–लो–क पा–दा–कु–ल–क मु–ख–वि लो–क ॥

मात्रासमकस्यैकेन पादेन, द्वाभ्यामुपचित्राया, विश्लोकस्यैकेन 'पादाकुलकम्' । तत्रोदाहरणम्—

२ ४ ६ ८ ९ १ १२ १४ १६ २ ४ ५ ६ ८ ९ ११ १२ १४ १६
ऽ–ऽ –ऽ–।–।–ऽ–ऽ–ऽ ऽ–ऽ–।–।–ऽ–ऽ–।–।–ऽ–ऽ
चि–र प्रा–र्थ्य–स्त–न–य–स्था–न पा–दा–कु–ल–क–लो–क–स–मा–गम् ।
२ ४ ६ ७ ८ ९ ११ १२ १४ १६ १ २ ३ ४ ५ ६ ७ ८ ९ १२ १४ १६
ऽ–ऽ ऽ–।–।–ऽ–।–। ऽ–ऽ–।–।–। । ।–। ।–।–ऽ–ऽ ऽ–ऽ
का–म का–म–ति या–म–वि था–फि–ल–र–पि न म–म प–र–लो–के म फि॥

यथा पादाकुलकनाम्नः श्लोकस्य पादेष्वस्थिरता तथेसर्वं ।

---

१ लहुगुरु एक्क णिम्म णहि जेहा, पअ पअ लेक्खह उत्तमरेहा । सुकइ फणिन्दह कण्ठहवलअं, सोरहमत्ता पाआकुलअम् ॥ इति प्रा० पिं० सू० १।१०४
२ 'मात्रासमक' इत्यधिक लि पु ३ 'यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् । अनियतवृत्तपरिणामसहितं प्रथितं जगत्सु पादाकुलकम् ॥' इति वृ० र०

उपचित्रापादेनैकेन, वानवासिकापादेन, पुनरुपचित्रापादाभ्यां पादाकुलकम् । तत्रोदाहरणम्—

१. २ ३ ४ ६ ७ ८ १०. ११ १२ १४ १६
।–।– ।–।–।–।–।–।–ऽ–।–।–ऽ–ऽ
प–रि–हृ–त–स–र्वं–प–रि–ग्र–ह–लो–क

१ २ ३ ४. ६ ७ ८ ९ १० ११ १२ १४ १६
।–।–।–।–ऽ–।–।–।–।–।–।–ऽ–ऽ,
प्र–ति–दि–न–व–र्धि–त–गु–रु–त–र–शो–कः ।

२. ३. ४ ६ ७ ८ १० ११ १२ १४ १६
ऽ–।–।–ऽ–।–।–ऽ–।–।–ऽ–ऽ,
दुः–ख–वि–व–र्धि–त–लो–च–न–वा–रिः

२ ४ ५ ६ ८ १० ११ १२ १४ १६
ऽ–ऽ–।–।–ऽ ऽ–। ।–ऽ–ऽ,
पा–दा–कु–ल–कं या–ति त–वा–रि. ॥

## इति मात्रासमकाधिकारः ।

## गीत्यार्या लः । ४ । ४८ ॥

यत्र पादे द्विर्वसव. षोडश लकारा भवन्ति सा 'गीत्यार्या' नाम जाति । 'ल' इत्यनुवर्तमाने पुनर्लग्रहणं द्विमात्रिकनिवृत्त्यर्थम् । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।
म–द–क–ल–ख–ग–कु–ल–क–ल–र–व–मु–ख–रि–णि

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।
वि–क–सि–त–स–र–सि–ज–प–रि–म–ल–सु–र–भि–णि ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११.१२ १३ १४ १५ १६
।–।–।–।–।–।–।–।–।–।–। ।–।–। ।–।
गि–रि–व–र–प–रि–स–र–स–र–सि म–ह–ति ख–लु

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
।–।–।–।–।–।–।–। ।–। ।–। ।–।–।–।,
र–ति–र–ति–श–य–मि–ह म–म हृ–दि वि–ल–स–ति ॥

सर्वलघुच्छन्दसि गीत्यार्याशब्दस्य प्रवेशयितुमशक्यत्वात्तन्नाम नोक्तम् ॥

---

१. 'द्विगुणितवसुलघुरचलधृतिः' इति नामान्तरं वृ० र०. २. 'चउमत्ता अट्ठगणा पुव्वद्धे, उत्तरद्ध होइ समरूआ । सो खन्धआ विआणहु पिङ्गल पभणेइ मुद्धि बहुसंभेआ ॥' इति प्रा० पि० सू० ११६३ इत्यनुसारेण स्कन्धकमित्यपि सञ्ज्ञान्तर भवेत्.

## शिखा विपर्यस्तार्धा । ४ । ४९ ॥

सैव गीत्यार्या विपर्यस्तार्धा यदा भवति तदा 'शिखा' इत्याख्यां लभते । अयमर्थः—यत्रार्धं सर्वलघु भवति, अर्धं च सर्वगुरु, इति ।

एवं तस्या एव विन्यासभेदेन भेदद्वयमाह—

## लः पूर्वश्चेज्ज्योतिः[1] । ४ । ५० ॥

पूर्वार्धभागे सर्वलघुद्वात्रिंशल्लकारो (३०) भवति, उत्तरार्धे सर्वगुरु षोडश (१६)-गकारस्तदा 'ज्योति' नाम शिखा भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १ ११ १२ १३ १४ १५,१६
।–।–।–।–।–।–।–।–।– ।–।–।–।–।–।–।
य–दि मु–ख–म–नु–प–म–म–प–र–म–मि–ल–प–सि

१७ १८ १९ २ २१ २२ २३ २४ २५,२६ २७ २८ २९ ३ ३१ ३२
।–।–।–। ।–।–।–। ।–।–।–।–।–।–।–।
प–रि–ह–र यु–व–ति–पु र–ति–म–ति–श–य–मि–ह ।

१ २ ३ ४ ५ ६ ७ ८
ऽ–ऽ–ऽ– –ऽ– – –ऽ
आ–रम–ज्यो–ति–र्यो–गा–भ्या–सा

९,१ ११ १२ १३ १४ १५,१६
ऽ–ऽ –ऽ–ऽ– ऽ–ऽ
दृ–ष्ट्वा दु–स–च्छे–दं कु–या ॥

## गश्चेत्सौम्या । ४ । ५१ ॥

तस्या एव शिखाया पूर्वार्धभागे सर्वगुरु षोडश (१६) गकारश्चेद्भवति, उत्तरार्धे द्वात्रिंश (३२) लकारो भवति तदा 'सौम्या' नाम शिखा भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
ऽ– ऽ ऽ–ऽ ऽ–ऽ ऽ–
सौ–म्यां द–ष्टिं दे–हि मे–हा

९ १ ११ १२ १३ १४ १५,१६
ऽ–ऽ–ऽ– ऽ ऽ– ऽ–ऽ
दे–दे–ऽस्मा–कं मा–र्सं मु–क्ता ।

---

१ 'मत्त अठाइस पढमे, बीए पत्तीस मत्ताइ । पभ पञ मन्ते सहुआ सुद्धा सिरखा विहाणेहु ॥' इति प्रा० पि० सू० १।१२७ सकशिखाच्छन्दस्त्वन्यत् २ 'मन्दउमद्दचसे ससारम्सिवमम्भवारणवरुण । णीसुमअणतासहसेहरसरुगअणुसरहुविमहरवीर ॥' इति प्रा० पि० सू० १।६४ इति सूत्रोक्तस्कन्धकभेदान्तर्गततारमार्ख्य छन्दोनामान्तरम् ३ 'अनङ्गक्रीडा' इति नामान्तरमस्य वृ० र०

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
।-।-।-।-।-।-। ।-।-।-।-।-। ।-। ।-।,
श-श-ध-र-मु-खि मु-ख-मु-प-न-य म-म हृ-दि

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२
।-।-।-।-।-।-।-।-।-।-। ।-।-।-।-।-।
म-न-सि-ज-रु-ज-म-प-ह-र ल-घु-त-र-मि-ह ॥

## चूलीकैकोनत्रिंशदेकत्रिंशदन्ते ग् । ४ । ५२ ॥

'अर्ध' ग्रहणम् (पि० सू० ४।४९) अनुवर्तते । यत्र प्रथमेऽर्धे एकोनत्रिंश(२९)ल्कारा भवति, द्वितीये चार्ध एकत्रिंशत् (३१), तयोश्चान्ते द्वौ (॥) लकारावुन्मूल्य प्रत्येकमेको गुरु (ऽ) क्रियते, तत् 'चूलिका' नाम छन्द । 'अन्ते ग्' इति विशेषोपादानसामर्थ्याद-न्येषा लघुत्वमुक्तं भवति । तेनाद्ये सप्तविंशति (२७)र्लघव , अन्ते गुरुरेको भवति । द्वितीयेऽप्येकोनत्रिंश (२९) ल्लघव , अन्ते गुरुश्चैक । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७, ८, ९ १० ११ १२ १३ १४
।-।-।-।-।-।-।-।-।-। ।-।-।-।,
र-ति-क-र-म-ल-य-म-रु-ति शु-भ-श-श-

१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २९
।-।- ।-।-।-।-।-।-।-। ।-।-।-।-ऽ,
म-भि-ह-त-हिं-म-म-ह-सि म-धु-स-म-ये ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
।-।-।-। ।-।-। ।-।-।-। ।-।-।-। ।,
प्र-व-स-सि प-थि-क वि-र-हि-त क-थ-मि-ह तु

१७ १८ १९ २० २१.२२ २३ २४ २५ २६ २७ २८ २९ ३१
।-।-।-।-।-।-।-।-।-।-।-।-।-।-ऽ,
प-रि-हृ-त-यु-व-ति-र-ति-च-प-ल-त-या ॥

अन्यै पुनरन्यथैवेदं सूत्रमधीयते—'चूलिकार्धमेकोनत्रिंशदन्ते ग्' इति । तेषामु-भयोश्चाप्यर्धयोरेकोनत्रिंशन्मात्रा गुर्वन्ता भवन्ति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२.१३ १४
।-।-।-।-।-।-।-।-।-।-।-।-।-।
घ-न-प-रि-म-ल-मि-ल-द-लि-कु-ल-मु-ख-

१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २९
।-।-।-।-।-।-।-।-।-।-।-।-।-।,
रि-त-नि-खि-ल-क-म-ल-म-ल-य-प-व-ने ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
।-।-।-। ।-।-। ।-।-।- । ।-।-।
ज-न-य-ति म-न-सि श-शि-मु-खि मु-द-म-

---

१. 'अतिरुचिरा' इति सञ्ज्ञान्तरं वृत्तरत्नाकरादिषु.

१५,१६ १७ १८ १९,२० २१ २२,२३ २४ २५,२६ २७ २८.
।-।-।-।-। ।-। ।-।-।-। ।-।-ऽ.
ति-रा-य-मि-ह म-म म-धु-र-य म-धु-ना ॥
'अथ प्रहणादत्र पादव्यवस्था नास्ति ॥

इदानीं गणमात्राच्छन्दसां गुरुलघुसंख्यापरिज्ञानार्थमिदमाह—

## सा ग् येन न समा लां ग्ल इति । ४ । ५३ ॥

सा गुरुसंख्या वेदितव्या । येन यावद्भिरक्षरैः । लां लघूनां मात्राणाम् । समा समसंख्या ग्लौ न स्तः । अपि तु न्यूनसंख्या एव । 'ग्ल' इत्यक्षराण्यभिधीयन्ते तेषां गुरुलघुरूपत्वात् । अयमभिप्रायः—आर्यादिषु यत्र यावत्यो मात्रा उपदिष्टास्तावन्त्यक्षराणि यथासंख्यं न पूर्यन्ते, सा तत्र गुरुसंख्या वेदितव्या । अवशिष्टा लघुसंख्या । तत्रायमुपयोगः—यदा कश्चित्पृच्छति, चत्वारिंशदक्षरायामार्यायां कति गुरवः संपद्यन्ते, कति वा लघव इति, तदा सप्तपञ्चाशन्मात्रोपदिष्टायामार्यायां मात्रासंख्यायां चत्वारिंशदक्षरसंख्या(४०)मपनीय तत्र येऽवशिष्यन्ते, तान् गुरूनुपदिशेत् । ते च सप्तदशैव(१७) । शेषांस्तु त्रयोविंशति(२३)लघुरूपाननुपदिशेत् । तद्यथा—

१ २ ३ ४ ५-६ ७-८ ९-१० ११-१२
।-।-।-।-ऽ - ऽ - ऽ - ऽ
स्व-ने-यु-ग-म - मु - मा - तं
(१)(२)(३)(४)(५) (६) (७) (८)

१३ १४-१५,१६ १७ १८ १९-२० २१ २२ २३ २४ २५-२६ २७-२८ २९-३०
।-ऽ-।-।-।-ऽ-। ।-।-।-ऽ - ऽ - ऽ
स-मी-प-त-र-य-र्ति ह-द-य-यो - का - मेः।
(९) (१०) (११)(१२)(१३)(१४) (१५)(१६)(१७)(१८)(१९) (२०) (२१)

---

१ 'कदाचित्' इति कलिकातामुद्रितपुस्तके २ अस्याभिप्रायः स्फुटं प्रकाश्यते—पुरोदर्शितायामार्यायां कति गुरवो लघवश्च वर्तन्त इति पृष्टे सति पूर्वं तावदार्यायां मात्रगणना विधेया तन्मात्रासंख्यापिण्डीभूताङ्कांश्च कुत्रचन पत्रादौ संस्थाप्याः पुनस्तस्या एव सर्वेषामक्षराणां गणनां विधाय तदक्षरसंख्यापिण्डीभूताङ्का मात्रासंख्यापिण्डीभूताङ्कानां संमुखे संस्थाप्याः ततो मात्रासंख्यापिण्डीभूताङ्केभ्योऽक्षरसंख्यापिण्डीभूताङ्कानपनयेत्, तत्र ये संख्याङ्का अवशिष्यन्ते तावत्संख्याकास्तस्यामार्यायां गुरवो भवन्ति पुनरक्षरसंख्याङ्केभ्य एतदवशिष्टगुरुसंख्याङ्कानपनयेत्, तत्र यावन्तोऽङ्का अवशिष्यन्ते तावन्तो लघवो जायन्ते अनयैव रीत्या गणमात्राच्छन्दसां गुरुलघुज्ञानं भवति तद्रीतिर्यथा—

मा० सं० इः अ० सं० इ गु० सं० इः अ० सं० इ गु० सं० इ ल० सं० इः
" ५७ — ४० = १७ " " ४० — १७ = २३ "

३१. ३२. ३३. ३४. ३५–३६.३७–३८.३९–४० ४१–४२.
। – । – । । – ऽ – ऽ – ऽ – ऽ
च – र – ति वि – मु – क्ता – हा – रं
(२२) (२३) (२४).(२५) (२६). (२७). (२८). (२९).

४३ ४४ ४५. ४६. ४७ ४८ ४९–५०.५१ ५२–५३ ५४–५५ ५६–५७. मात्राङ्काः।
। – । – । – । । – । – ऽ । – ऽ – ऽ – ऽ
म – त – मि – व भ – व – तो रि – पु – स्त्री –णाम् ॥
(३०) (३१) (३२) (३३).(३४).(३५) (३६) (३७) (३८) (३९). (४०). अक्षराङ्काः।

इति श्रीभट्टहलायुधविरचितायां पिङ्गलच्छन्दोवृत्तौ चतुर्थोऽध्यायः।

---

पञ्चमोऽध्यायः।

## वृत्तम्। ५। १॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामस्तद् 'वृत्तम्' वेदितव्यम्। तेन प्राक्तनं लौकिकं छन्दोजातं 'जातिः' इत्युच्यते। इत उत्तरं च 'वृत्तम्'। तथा चोक्तम्—

'पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा।'

गायत्र्यादौ छन्दसि वर्तत इति 'वृत्तम्'। तच्च स्थिरगुरुलघ्वक्षरविन्यासमिष्यते। पादेन[1] संयोगात् 'पद्यम्'। यथा[2] आर्यादिच्छन्दःस्वपि पादव्यवस्था नास्तीति पादौ संयुक्तौ, वृत्ते पुनः पृथग्भवत इत्यर्थः। पादेन[3] सयोगाभावात्। तथा चोक्तम्—

'एकदेशस्थिता जातिर्वृत्तं गुरुलघुस्थिर[4]तम्' इति॥

## सममर्धसमं विषमं च। ५। २॥

समसर्वावयवत्वात् 'समम्'। यस्य चत्वारः पादा एकलक्षणयुक्तास्तत् 'समं' वृत्तम्। शेषं च संज्ञानुरूपमेव। तत्रा[5]र्धे समे यस्य तत् 'अर्धसमम्' सर्वावयवेभ्यः। अर्धाभ्या च विगतं समं यस्य तद् 'विषमम्'। एवं त्रिप्रकारम[6]पि वृत्तजातमुक्तम्॥

## समं तावत्कृत्वः कृतमर्धसमम्। ५। ३॥

'समम्' इति समवृत्तसंख्योच्यते। तयैव गुणि[7]तं 'तावत्कृत्वः कृतम्' [8]उच्यते। एतदुक्तं भवति—समवृत्तसंख्यागुणिते समवृत्तसंख्या[9]याः पिण्डे या संख्या निष्पद्यते तावत्संख्यमर्धसमं वेदितव्यम्। तत्र गायत्रे छन्दसि समवृत्तसंख्या चतुःषष्टि(६४)रष्टमा-

---

१. 'पादयोः सयोगौ तयोर्विरहात्' इति लिखितपुस्तके. २. 'तथा' इति लि. पु. ३. 'पादसंयोगयोरभावात्' इति लि. पु. ४. 'स्थिरम्' इति लि. पु. ५. 'तत्रार्धं समं' इति लि. पु. ६. 'अपि' इति लि. पु. नास्ति. ७. 'तावदङ्कगुणितं' इति लि. पु. ८. 'इति' इति लि. पु. अधिकम्. ९. 'समवृत्तपिण्डे' इति लि. पु.

ध्यायसिद्धा । तस्यां चतुःषष्टि(६४)सङ्ख्यागुणितायामधसमवृत्तसंख्या सपद्यते—चत्वारि सहस्राणि, षण्नवतिश्च वृत्तानि । अङ्कतोऽपि ( ६४×६४ )=४०९६ ॥

## विषमं च । ५ । ४ ॥

अर्धसमं तावत्कृत्वाकृतं 'विषमं' भवति । एतदुक्तं भवति—अर्धसमवृत्तसंख्या (४०९६) अर्धसमवृत्तसंख्यया(४०९६) एव गुणिता विषमवृत्तसंख्या सपद्यते—एका कोटिः सप्तषष्टिलक्षाणि सप्तसप्ततिसहस्राणि, द्वे शते, षोडशोत्तरे । अङ्कतोऽपि ( ४०९६×४०९६ )=१६७७७२१६ इति ॥

समसमाधसमोपचितमधसमं विषमं च यथाक्रमं समोपचितं समाधसमाभ्यां चोपचितं वेदितव्यम् ॥

## राश्यूनम् । ५ । ५ ॥

तत् विषमं वृत्तं (१६७७७२१६) अर्धसमं (४०९६) वा राश्यूनम् (१६७७७२१६ −४०९६=१६७७३१२०) कर्तव्यम् । मूलराशि (४०९६) समुदायात् (१६७७७२१६) अपनेतव्य इति । कोटिरेका, सप्तषष्टिलक्षाणि, त्रिसप्ततिसहस्राणि, विंशत्युत्तरं शतं शुद्धविषमवृत्तस्य संख्या । अङ्कतः १६७७३१२० । चत्वारि सहस्राणि, द्वात्रिंशच्चेति शुद्धार्धसमसंख्या । (४०९६−६४)=४०३२ समसंक्षेपोऽयं राश्यूनमिति ॥

## ग्लिति समानी । ५ । ६ ॥

गकार(S)लकारा(।)भ्यां यद्वृत्तं समाप्यते तत् 'समानी' नाम । 'पादस्यानुष्टुब्वक्त्रम्' (पि० सू० ५।९) इत्यत्र सूत्रात् सिंहावलोकितन्यायेनानुष्टुब्ग्रहणमनुवर्तते । तेनाष्टाक्षरपादो यावद्भिर्गकारलकारैः पूर्यते तावतामेव ग्रहणम् । तत्रोदाहरणम्—

S – । – S – । S – । – S – । S – । – S – । – S । S – ।
या–स–यो–ऽपि वि–न–मे–ण य–स्स–मा–न–तां न या–ति ।
S – । S – । – S – । – S – । S – । S – । – S । – S – ।
त–स्य च–न्द्र–भे–म–र–स्य के–न तु–ल्य–ता कि–ये–त ॥

---

१ 'चतुःषष्टिसंख्यायां' इति लि पु २ 'अर्धसमसंख्या निष्पद्यते' इति लि पु ३ 'अर्धसमराशिर्मूलराशिः' इति लि पु ४ 'शतमेकमिति विषमवृत्तस्य संख्या' इति लि पु ५ 'अङ्कतः' इति लि पु नास्ति ६ अङ्कतोऽपि ' इत्यधिकं लि पु ७ 'हारग धर्मपुरेण विहुमहुअक्खरेण । बारहाई मत्त जाण मल्लिआ सुछंदमाण ॥ इति प्रा० पि० सू० २।७१ इत्यनुसारेण मल्लिकाख्यं नामान्तरम् ८ समाप्येत' इति कलिकातामुद्रितपुस्तके

अपि च ।

ऽ ।–ऽ ।–ऽ–।–ऽ–। ऽ–।–ऽ–।–ऽ–।–ऽ–।
ओँ न–मो ज–ना–र्द–ना–य पा–प–स[1]–घ–मो–च–ना–य ।
ऽ–।–ऽ–।–ऽ–।–ऽ–। ऽ–।–ऽ–।–ऽ–।–ऽ–।
दु–ष्ट–दै–त्य–म–र्द–ना–य पु–ण्ड–री–क–लो–च–ना–य ॥

## ल्गिति प्र[2]माणी । ५ । ७ ॥

लकार(।)गकारा(ऽ)भ्या यद्वृत्तं समा[3]प्यते तत् 'प्रमाणी' नाम । 'जरौ ल[4]गौ' इत्यपरे तत्रोदाहरणम्—

।–ऽ–।–ऽ–।–ऽ–।–ऽ ।–ऽ–।–ऽ ।–ऽ–।–ऽ
स–रो–ज–यो–नि–र–म्ब–रे र–सा–त–ले त–था–च्यु–तः ।
।–ऽ ।–ऽ–।–ऽ–।–ऽ ।–ऽ । ऽ ।–ऽ–।–ऽ
त–व प्र–मा–ण–मी–क्षि–तुं क्ष–मौ न तौ व–भू–व–तु ॥

## वितानमन्यत् । ५ । ८ ॥

आभ्या समानी-प्रमाणीभ्यामन्यदष्टाक्षरपादं छन्दो 'वितानं' नाम । त[5]त्रोदा[6]हरणम्—

ऽ–ऽ ।–। ऽ–ऽ ।–। ऽ–ऽ ।–।–ऽ ऽ ।–।
तृ[7]–ष्णा त्य–ज ध–र्मं भ–ज पा–पे हृ–द–यं मा कु–रु ।
ऽ–ऽ ।–। ऽ–ऽ–।–। ऽ–ऽ–।–।–ऽ ऽ–।–।
इ–ष्टा य–दि ल–क्ष्मी–स्त–व शि–ष्टा–न–नि–शं सं–श्र[8]–य ॥

द्वितीयं च—

।–।–ऽ ऽ–। ।–ऽ–ऽ ।–।–ऽ–ऽ–।–।–ऽ–ऽ
हृ[9]–द–यं य–स्य वि–शा–लं ग–ग–ना–भो–ग–स–मा–नम् ।
।–।–ऽ–ऽ ।–।–ऽ–ऽ ।–।–ऽ–ऽ–। ।–ऽ–ऽ
ल–भ–ते–ऽसौ म–णि–चि–त्रं नृ–प–ति–मू–र्ध्नि वि–ता–नम् ॥

अन्यच्च—

ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ
क[10]ङ्का–ल–मा–ल–भा–रि–णं कं–द–र्प–द–र्प–हा–रि–णम् ।

---

१ 'पापबन्धमोचनाय' इति लिखितपुस्तके. २ 'लहू गुरू णिरन्तरा **पमाणि** अट्ठ अक्खरा ।' इति प्रा० पि० सू० २।६९. 'द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा । तदा निवेदयन्ति ता बुधा **नगस्वरूपिणीम्** ॥' इति श्रुतबोधानुसारेण नगस्वरूपिणीत्यपि नामान्तरम् ३. 'समाप्येत' इति क. का. मु पु ४. 'नाराचम्' इति कलिकातामुद्रिते ५ छन्दोमञ्जरीकारा ६. 'अत्र' इति क. का. पुस्तके. ७.–९ प्राकृतपिङ्गलानुसारेणात्र दोहाभेदान्तर्गत**करभ**च्छन्द ८ 'वाश्रय' इति लि. पुस्तके. १०. '**नाराचकं** तरौ लगौ' इति छन्द कौस्तुभानुसारेणात्र नाराचकं छन्द.

ऽ– –।–ऽ–। –ऽ–।–ऽ – –।– ।–ऽ–।–॰
सं–सा–र–ब–न्ध–मो–च–न प–न्दा–म–हे त्रि–लो–च–नम् ॥

अपि च—

–ऽ ।–ऽ–। ऽ–।– ऽ–ऽ –।– –।– –।–॰
सं–स्था स–रा–मि सु–न्द–रं च–न्द्रो–प–मा–न–मा–न–नम्।
ऽ–ऽ–।– –।–ऽ–।–ऽ ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ
क–द–म्ब–चा–प–म–ङ्गु–र– भ्रू–वि–भ्र–मो–प–शो–भि–तम् ॥

[अपि च]—

ऽ–।–।– ।।–ऽ–ऽ ऽ–।–।–ऽ–। ।– –
अ–न्य–द–सो हि वि–ता–न भे–स–प–टे–न य–दु–त्तम्।
–।–।–ऽ–। । –ऽ ऽ–। ।–ऽ–।–।– –॰
चि–त्र–प–दा–पि च भौ गौ वे–न ग–ता–र्थ–मि–यं–तत् ॥

किं च 'वितानमन्यत्' इति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति। अन्यथा 'वितानं भौ गौ' इत्येव ब्रूयात् ॥

## पादस्यानुष्टुब्वक्त्रम्। ५। ९॥

'पादस्य' इत्ययमधिकार आससमाप्त्यामपरिसमाप्ते[४]। 'अनुष्टुब्वक्त्रम्' इति च प्राक् प्रतिपादेचतुष्वर्णा[५] वदचतुरूर्ध्वाद् (य्यम्)' (पि॰ सू॰ ५।२०) अधिकृत वेदितव्यम् ॥

## न प्रथमात्स्नौ। ५। १०॥

प्रतिषेधार्थमिद सूत्रम्। अत्र वक्त्रजातौ पादस्य प्रथमाद्वर्णादूर्ध्वं सगण-(।।ऽ) नगणौ (।।।) न कर्तव्यौ ॥

## द्वितीयचतुर्थयो रश्च। ५। ११॥

द्वितीयचतुर्थयोश्च पादयो प्रथमादूर्ध्वं रेफो (ऽ।ऽ) न कर्तव्य इत्युपदेशः ॥

## वान्यत्। ५। १२॥

अन्येषां षण्णां गणानां मध्ये यत्किंचिद् गणान्तरं प्रथमान्तरं कर्तव्यम् ॥

---

१–२ 'चित्रपदा यदि भौ गौ' इति छन्दःकौस्तुभानुसारेणात्र चित्रपदाख्य छन्द अन्यदपीह' इति लि पु ३ 'विपच्यात्' इति क का मु पुस्तके 'एव' इति लि पु नास्ति ४ समाप्ते इति क का मु पुस्तके ५. प्रतिपादचतुष्वर्णा' इति क का मु पुस्तके नास्ति ६ 'वर्णात्' इति क का मु पुस्तके ७ 'द्वितीयचतुर्थयोश्च' इति लि पु नास्ति ८ 'रेफोऽपि' इति क का मु पुस्तके ९ कल्लिकावामुद्रिते तु 'सगण (।।ऽ), नगणाभ्यां(।।।) मन्यन्मगणा (ऽऽऽ) त्रिविकपट्कमध्ये यत्किंचिद्विकान्तरं वा कर्तव्यम् ॥'

## यँ चतुर्थात् । ५ । १३ ॥

'य' इति लुप्तविभक्तिको निर्देशः । पादस्य चतुर्थादक्षरादूर्ध्वं यँगणः (ISS) प्रयोक्तव्यः । सर्वेषामुदाहरणाँनि—

ल० यगणः यगण ल० ल० यगणः यगण गु०
I — I S S — I S S — I — I — I S S — I S S — S
नैँ(१)वधारा(४)म्बुसंसि—क्त— व(१)सुधाग(४)न्धिनि श्वा—सम् ।

गु० जगण यगण गु० ल० तगणः यगण गु०
S — I S I — I S S — S I — S S I — I S S — S
कि(१)चिदुन्न(४)तघोणा—ग्रं म(१)ही काम(४)यते व—क्रम् ॥

अन्यैरप्युक्तम्—

गु० भगण यगणः ल० ल० मगण यगण गु०
S — S I I — I S S — I I — S S S — I S S — S
नीँ(१)लोत्पल(४)वनेष्व—द्य च(१)रन्त्यश्वा(४)रुसंरा—वा ।

गु० मगणः यगणः गु० ल० मगणः यगण गु०
S — S S S — I S S — S I — S S S — I S S — S
रा(१)मा. कौशे(२)यसंवी—ता प्र(१)नृत्यँन्ती-च(४) काद—म्बा ॥

तथा—

गु० रगणः यगणः गु० गु० भगण यगणः गु०
S — S I S — I S S — S S — S I I — I S S — S
र्दुँ(१)र्भाषिते(४)ऽपि सौभा—ग्यं प्रा(१)य प्रकु(४)रुते प्री—तिः ।

गु० रगणः यगणः ल० गु० मगणः यगण गु०
S — S I S — I S S — I S — S S S — I S S — S
भा(१)तुर्मनो(४)हरन्त्ये—व दौ(१)र्लालित्यो(४)क्तिभिर्बा—ला. ॥

इत्यादि ॥

---

१ 'अब्धेर्योऽनुष्टुभि ख्यातम्' इति प्रा० पि० सू० २।३३२. २. 'यकार' इति क. का. मु. पुस्तके. ३. 'उदाहरणम्' इति क. का पुस्तके. ४. पि० सू० ५।१० सूत्रस्योदाहरणम्. ५. 'वँसुधागन्ध' इति लि. पुस्तके. ६. पि० सू० ५।१३ इत्यस्योदाहरणम् १४. 'प्रनृत्यन्तश्च' इति क. मु पुस्तके. ८. पि० सू० ५।१? इत्यस्योदाहरणम्. 'दुर्भाविते' इति लि. पुस्तके ।

## पथ्या[१] युजो ज् । ५ । १४ ॥

'चतुर्थाद्' (पि॰ सू॰ ५।१३) इति वर्तते । अत्र पद्ये युज (२,४) पादस्य चतुर्थादक्षरादूर्ध्वं जगणः (।ऽ।) प्रयुज्यते, तद्वृत्त 'पथ्या' नाम । 'य' (।ऽऽ) सापवादः । अत्रोदाहरणम्—

गु तगणः यगणः ल गु मगणः जगणः ल
ऽ — ऽ ऽ । — । ऽ ऽ — । ऽ — ऽ ऽ ऽ — । ऽ । — ।
नि(१)त्य मीति(४)निपण्ण–स्य रा(१)ज्ञो राष्ट्र(४)न सीद–ति ।

ल यगणः यगणः गु गु मगणः जगणः गु
। — । ऽ ऽ — । ऽ ऽ — ऽ ऽ — ऽ ऽ ऽ — । ऽ । — ऽ
न(१)हि पथ्या(४)शिनः का–ये जा(१)यन्ते व्या(४)धिवेद ना ॥

## विपरीतैकीयम्[२] । ५ । १५ ॥

उक्तलक्षणाद्विपरीता ' पथ्या ' भवतीत्येकीयं मतम्[३] अयुक्पादे चतुर्थादक्षरात् परतो जकारः कर्तव्य , युक्पादे य एवावतिष्ठते । अत्रोदाहरणम्—[४]

गु यगणः जगणः गु गु मगणः यगणः गु
ऽ — । ऽ ऽ — । ऽ । — ऽ ऽ — ऽ ऽ ऽ — । ऽ ऽ — ऽ
म(१)दिराक्षा(४)नुवर्ति– नी या(१)सौ स्यात्सा(४) गृहे ल–क्ष्मीः ।

गु यगणः जगणः गु ल यगण यगण गु
ऽ — । ऽ ऽ — । ऽ । — ऽ । — । ऽ — । ऽ — ऽ
स्व(१)प्रभुत्वा(४)भिमानि–नी वि(१)परीता(४)परित्या ज्या ॥

## चपला[५]युजो न्[६] । ५ । १६ ॥

अयुज (१,३) पादस्य यदा चतुर्थाक्षरा[७]दूर्ध्वं नकारो (।।।) भवति, युज–(२,४) पादे य (।ऽऽ) एवावतिष्ठते तदा, 'चपला' नाम सानुष्टुप्[८] । तत्रोदाहरणम्—[९]

गु यगणः नगण गु गु यगणः यगणः गु
ऽ — । ऽ ऽ — । । । — ऽ ऽ — । ऽ ऽ — । ऽ ऽ — ऽ
क्षी(१)यमाणा(४)भवय–ना य(१)कोनिर्मा(४)ल्यनासा–मा ।

---

१ युजोश्चतुर्थतो येन पथ्यावक्त्रं प्रकीर्तितम् इति प्रा पि॰ सू॰ २।२।१४ पथ्यायुजो ज ' इति ख पुस्तके. २ जकार-' इति क पुस्तके ३ 'ओजयोर्जेन पादयोस्तदेव विपरीतादि' इति छन्द कौस्तुभे ४ कलिकाताप्रमुद्रिते तु—'उक्तलक्षणाद्विपरीतलक्षणा एकीयमते 'पथ्या' भवति । यथा— ५ स्थिरा' इति क पुस्तके ६ 'चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ' इति छन्द कौस्तुभे ७ 'अक्षरात्' इति क पुस्तके नास्ति ८ 'अनुष्टुब्वक्त्रम् इति क पुस्तके ९ यथ' इति क पुस्तके, ख पुस्तके च

गु० यगणः नगण गु० ल० यगण यगणः गु०

ऽ — । ऽ ऽ — । । । — ऽ । — । ऽ ऽ — । ऽ ऽ — ऽ

क(१)न्यका वा(४)क्यचप-ला ल(१)भते धू(४)र्तसौभा-ग्यम् ॥

## विपुला युग्लः सप्तमः । ५ । १७ ॥

अधिकारोऽयम् । 'य चतुर्थात्' (पि० सू० ५।१३) इत्यनेन सर्वत्र यकारे (।ऽऽ) कृते[3] यदा युक्(२,४) पादे सप्तमो वर्णो लघुर्भवति, तदा 'विपुला' नाम[2] सानुष्टुव्[4] ॥

ननु पथ्यालक्षणेऽन्तर्भूतत्वात्[5] पुनरुक्तमेतत् । नैवम्, विपुलावर्गस्येदानीमारभ्यमाणत्वात्तद्विनानुपपत्ते । युक् (२,४) पादे सप्तमेन लघुनावश्यमेव भवितव्यम् । प्रथमतृतीययोश्चैतावता यकारस्यापवादः । तथा च वक्ष्यति[6]—'सर्वत[7] सैतवस्य' (पि० सू० ५।१८) इत्यादिना । पथ्यायां तु यकार (।ऽऽ) एवावतिष्ठते ॥

## सर्वतः सैतवस्य । ५ । १८ ॥

सैतवस्याचार्यस्य मतेन युक्(२,४)पादे अयुक्(१,३) पादे च सप्तमो लकार (।)एव[8] कर्तव्य. । अत्रो[10]दाहरणम्—

गु० जगण जगणः गु० गु० भगणः जगणः गु०

ऽ — । ऽ । — । ऽ । — ऽ ऽ — ऽ । । — । ऽ । — ऽ

सै(१)तवेन(४)पथार्ण(७)वं ती(१)र्णो दश(४)रथात्म(७)जः ।

गु० मगणः जगणः गु० ल० मगण जगण गु०

ऽ — ऽ । । — । ऽ । — ऽ । — ऽ ऽ ऽ — । ऽ । — ऽ

र(१)क्ष क्षय(४)करीं पु(७)न· प्र(१)तिज्ञा स्वे(४)न वाहु(७)ना ॥

## भ्रौ न्तौ च । ५ । १९ ॥

'सर्वत· सैतवस्य' (पि० सू० ५।१८) इति निवृत्तम् । 'चपलायुजो न्' (पि० सू० ५।१६) इत्येतस्माद[11]युग्ग्रहणमनुवर्तते । 'विपुला युग्ल. सप्तम·' (पि० सू० ५।१७) इति सर्वमे[12]नुवर्तनीयम् । अयुक् (१,३) पादे यदा[13] चतुर्थादक्षरात्परतो यकारं (।ऽऽ) वाधित्वा

---

१ 'भवते' इति क पुस्तके· २. 'यस्या तसप्तमो युग्मे सा **युग्मविपुला**' इति छन्द कौस्तुभे युग्मविपुलेति नामान्तरम्. ३. 'प्राप्ते' इति क. पुस्तके. ४. 'सानुष्टुव्' इति क. पुस्तके नास्ति. ५. 'लक्षणान्तर्भूतत्वात्' इति क पुस्तके. ६. 'वदति' इति लि. पुस्तके: ७ लिखितपुस्तके सूत्रमत्रैतन्नास्ति. ८. 'सैतवस्याखिलेष्वपि' इति छन्द कौस्तुभे. ९. 'एव' इति नास्ति लि. पुस्तके. १०. 'तत्र' इति क. पुस्तके. ११. 'इत्यस्मात्' क. पुस्तके. १२. 'अनुवर्तते' इति क. पुस्तके. १३. 'तदा' इति लि. पुस्तके.

भकार (SII) रेफ (SIS) नकार (III) तकारा (SSI) विकल्पेन भवन्ति, तदासौ ‘विपुला’[1] नाम। तत्र भकारेण विपुलोदाहरणम्—

ल रगणः भगणः गु    ल मगणः जगणः गु
I — S I S — S I I — S    I — S S S — I S I — S
इ(१)यं सखे(४)चन्द्रमु(७)खी    स्मि(१)तज्योत्स्ना(४)च मानि(७)नी ।

गु रगणः भगणः गु    गु जगणः जगणः गु
S — S I S — S I I — S    S — I S I — I S I    S
इ(१)न्दीवरा(४)क्षी हृद(७)यं    द(१)न्दहीति(४)तथापि(७)मे ॥

‘अयुज’ (पि॰ सू॰ ५।१६) इति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम्। व्यक्तिपक्षे पुनरेकस्य। एकपक्षे पुनः प्रथमस्य तृतीयस्य वा। तथा च महाकवीनां प्रयोगाः—

ल रगणः भगणः गु    गु यगणः जगणः गु
I — S I S — S I I — S    S — I S S — I S I — S
म(१)टे मटे(४)वैभव(७)णः    च(१)त्वरे च(४)त्वरे शि(७)व ।

गु यगणः यगणः गु    गु भगणः जगणः गु
S — I S S — I S S — S    S — S I I — I S I — S
प(१)र्वते प(४)र्वते रा(७)म    स(१)र्वत्र म(४)धुसूद(७)न ॥

गु भगणः यगणः गु    गु यगणः जगणः गु
S — S I I — I S S — S    S — I S S — I S I — S
दे(१)वः स ज(४)यति श्री(७)मान्    द(१)ग्धघोरो(४)महाम(७)ति ।

गु रगणः भगणः गु    गु जगणः जगणः ल
S — S I S — S I I — S    S — I S I — I S I — I
य(१)स्य प्रसा(४)दाद्भुव(७)न    धा(१)वते प(४)थि तिष्ठ(७)ति[2] ॥

ल रगणः भगणः ल    ल तगणः जगणः गु
I — S I S — S I I — I    I — S S I — I S I — S
उ(१)पस्थितं(४)प्राञ्जलि(७)ना    वि(१)नीतेन(४)गरुत्म(७)ता ।

गु रगणः भगणः गु    गु तगणः जगणः गु
S — S I S — S I I — S    S — S S I — I S I — S
ना(१)रायण(४)स्तौमि स(७)दा    म(१)क्तानां म(४)मनाय(७)नम् ॥

इत्यादि ॥

---

१ ‘भेनाऽभ्यितो मा विपुला’ इति छन्दःकौस्तुभे    २ ‘दण्डधारी महीपतिः’ । क. पुस्तके.

इदानीं रेफ[1](ऽ।ऽ)विपुलोदाहरणम्—

गु० रगण रगण गु० ल० भगणः जगण गु०
ऽ—ऽ।ऽ—ऽ।ऽ—ऽ ।—ऽ।।—।ऽ।—ऽ
ल(१)क्ष्मीपतिं(४)लोकना(७)थं र(१)थाङ्गध(४)रमच्यु(७)तम् ।
गु० रगण रगण गु० ल० जगणः जगण गु०
ऽ—ऽ।ऽ—ऽ।ऽ—ऽ ।—।ऽ।—।ऽ।—ऽ
य(१)ज्ञेश्वरं[2](४)शार्ङ्गपा(७)णिं प्र(१)णमामि(४)त्रयीत(७)नुम् ॥

व्यक्तिपक्षे प्रथमे[3] पादे—

ल० रगण रगणः गु० गु० मगण जगण गु०
।—ऽ।ऽ—ऽ।ऽ—ऽ ऽ—ऽऽऽ—।ऽ।—ऽ
म(१)हाकविं(४)कालिदा(७)सं व(१)न्दे वाग्दे(४)वतां गु(७)रुम् ।
गु० मगण यगण ल० गु० जगण जगणः गु०
ऽ—ऽऽऽ—।ऽऽ—। ऽ—।ऽ।—।ऽ।—ऽ
य(१)ज्ज्ञाने वि(४)श्वमाभा(७)ति द(१)र्पणे प्र(४)तिबिम्ब(७)वत् ॥

तृतीये[4] पादे—

गु० जगण सगण गु० गु० तगणः जगणः गु०
ऽ—।ऽऽ—।।ऽ—ऽ ऽ—ऽऽ।—।ऽ।—ऽ
का(१)मिनीभिः(४)सह प्री(७)तिः क(१)स्मै[5] नाम (४)न रोच(७)ते ।
ल० यगण रगण ल० गु० जगण जगण गु०
।—।ऽऽ—ऽ।ऽ—। ऽ—।ऽ।—।ऽ।—ऽ
य(१)दि न स्या(४)द्वारिवी(७)चि - च(१)ञ्चलं ह(४)तजीवि(७)तम् ॥

इदानीं नकार[6](।।।)विपुलोदाहरणम्—

गु० रगण नगणः गु० गु० यगणः जगण गु०
ऽ—ऽ।ऽ—।।।—ऽ ।—।ऽऽ—।ऽ।—ऽ
य(१)स्या विभा(४)ति विपु(७)ला म(१)न्मथस्था(४)नपिण्डि(७)का ।
गु० यगण नगण गु० गु० तगणः जगणः गु०
ऽ—।ऽऽ—।।।—ऽ ऽ—ऽऽ।—।ऽ।—ऽ
या(१)चतु ष(४)ष्टिचतु(७)रा सा(१)स्त्री स्यान्नृ(४)पवल्ल[7](७)भा ॥

---

१. 'इत्यमन्या रश्चतुर्थात्' इति छ कौ०. २. 'ईश्वरम्' इति क. पुस्तके. ३. 'प्रथमे पादे' इति लिखितपुस्तके नास्ति. 'वाग्देवतागुरुं' इति क. मु पु ४ 'तृतीयपादे' इति लि पुस्तके. ५. 'कस्य' इति लि. पुस्तके ६. 'नोऽम्बुधेश्चेन्नविपुला' इति छन्दःकौस्तुभकारः. ७. 'कृतवल्लभा' इति लि. पुस्तके.

तथैव भारवि —

ल रगणः नगणः गु ल तगणः जगणः गु
| — ऽ | ऽ — | | | — ऽ | — ऽ ऽ | — | ऽ | — ऽ
युयु(१)त्सुनेव(४)कव(७)चं कि(१)मामुक्त(४)मिदं त्व(७)या ।
ल रगणः नगणः गु गु जगणः जगणः गु
| — ऽ | ऽ — | | | — ऽ ऽ — | ऽ | — | ऽ | — ऽ
त(१)पस्विनो(४)हि वस(७)ते[२] के(१)वलाजि(४)नवल्क(७)ले ॥

व्यक्तिपक्षे कालिदास —

ल मगणः नगणः गु गु[३] मगणः जगणः गु
| — ऽ ऽ ऽ — | | | — ऽ ऽ — ऽ ऽ ऽ — | ऽ | — ऽ
अ(१)नाकृष्ट(४)स्य विष(७)यैर् वि(१)द्यानां पा(४)रदृश्व(७)न ।
गु जगणः यगणः गु गु तगणः जगणः गु
ऽ — | ऽ | — | ऽ ऽ — ऽ ऽ — ऽ ऽ | — | ऽ | — ऽ
त(१)स्य धर्म(४)रतेरा(७)सीद् वृ(१)द्धत्व ज(४)रसा वि(७)ना ॥

तथा च—

ल जगणः यगणः गु गु तगणः जगणः गु
| — | ऽ | — | ऽ ऽ — ऽ ऽ — ऽ ऽ | — | ऽ | — ऽ
तै(१)व मन्त्र(४)कृतो म(७)न्त्रैर् दू(१)रात्संश(४)मितारि(७)भि ।
गु मगणः नगणः गु गु जगणः जगणः गु
ऽ — ऽ ऽ ऽ — | | | — ऽ ऽ — | ऽ | — | ऽ | — ऽ
प्र(१)त्यादिश्य(४)न्त इव(७)मे दृ(१)ष्टलक्ष्य(४)भिदः श(७)राः

इदानीं सकार(ऽऽ।) विपुलोदाहरणम्—

गु मगणः तगणः गु ल भगणः जगणः गु
ऽ — ऽ ऽ ऽ — ऽ ऽ | — ऽ | — ऽ | | — | ऽ | — ऽ
व(१)न्दे देवं (४)सोमेश्व(७)रं ज(१)टामुकु(४)टमण्डि(७)तम् ।
गु भगणः तगणः गु ल भगणः जगणः गु
ऽ — ऽ | | — ऽ ऽ | — ऽ | — ऽ | | — | ऽ | — ऽ
अ(१)र्द्धाङ्गध(४)रं चन्द्र (७)म —शि(१)खामणि(४)विभूषि(७)तम् ॥
इति जातिपक्षे[६] ।

व्यक्तिपक्षे—

गु रगणः तगणः गु गु जगणः जगणः गु
ऽ — ऽ | ऽ — ऽ ऽ | — ऽ ऽ — | ऽ | — | ऽ | — ऽ
व(१)न्दे कवि(४)श्रीमार(७)विं को(१)कसंत(४)मसच्छि(७)दम् ।

---

१-३-४ नकारविपुलोदाहरणानि २ वसते' इति किरातार्जुनीये ५ शङ्करं नरेशाधिपाननम्' इति ख पुस्तके ६ इति जातिपक्षे' इति क पुस्तके नास्ति

ल० मगणः यगणः ल० गु० तगणः जगणः गु०

। — ऽ ऽऽ — ।ऽ ऽ — । ऽ — ऽ ऽ · । — । ऽ । — ऽ

दि(१)वा दीपा(४)इवाभा(७)न्ति य(१)साग्रे क(४)वयोऽप(७)रे ॥

तथान्येषामपि प्रयोगैः[1]—

गु० जगणः यगणः गु० गु० यगण जगण गु०

ऽ — । ऽ । — । ऽ ऽ — ऽ ऽ — । ऽ ऽ — । ऽ । — ऽ

लो(१)कवत्प्र(४)तिपत्त(७)व्यो लौ(१)किकोऽर्थ (४)परीक्ष(७)कैः ।

गु० मगणः तगण· ल० ल० यगण जगणः गु०

ऽ — ऽ·। । —ऽ ऽ · । — । । — । ऽ ऽ — । ऽ । — ऽ

लो(१)कव्यव(४)हारं प्र(७)ति स(१)दृशौ वा(४)लपण्डि(७)तौ ॥

इदानीं चकाराकृष्टं मकार(ऽऽऽ)विपुलोदाहरणम्[2]—

गु० भगणः मगणः गु० गु० यगण· जगण· गु०

ऽ — ऽ । । — ऽ · ऽ ऽ — ऽ ऽ — । ऽ ऽ — । ऽ । — ऽ

स(१)र्वातिरि(४)क्तं लाव(७)ण्यं वि(१)भ्रती चा(४)रुविभ्र(७)मा ।

गु० रगणः मगणः ल० गु० मगणः जगणः गु०

ऽ — ऽ । ऽ — ऽ ऽ ऽ — । ऽ — ऽ ऽ ऽ — । ऽ । — ऽ

स्त्री(१)लोकस्य(४ष्टिस्त्वन्यै(७)व नि·(१)सामान्य(४)स्य वेध(७)सः ॥

व्यक्तिपक्षे श्रीकालिदासः—

ल० रगण· मगणः गु० ल० यगण· जगणः गु०

। — ऽ । · ऽ — ऽ · ऽ · ऽ — ऽ । — । ऽ ऽ — । ऽ · । — ऽ

म(१)नोभिरा(४)मा· शृण्व(७)न्तौ र(१)थनेमि(४)स्वनोन्मु(७)खैः ।

गु० यगण यगण गु० ल० मगणः जगणः गु०

ऽ — । ऽ ऽ — । · ऽ ऽ — ऽ । — ऽ · ऽ · ऽ — । · ऽ · । — ऽ

ष(१)ड्जसंवा(४)दिनी· के(७)का द्वि(१)धाभिन्ना·(४)शिखण्डि(७)भिः ॥

ल० रगण मगण गु० गु० तगणः जगण गु०

। — ऽ · । ऽ — ऽ · ऽ ऽ — ऽ ऽ — ऽ ऽ । — । ऽ । — ऽ

अ(१)थ प्रदो(४)षे दोष(७)ज्ञः सं(१)वेशाय(४)विशांप(७)तिम् ।

गु० तगणः यगणः गु० ल० यगणः जगण गु०

ऽ — ऽ ऽ · । — । ऽ ऽ — ऽ । — । ऽ ऽ — । ऽ । — ऽ

सू(१)नुः सून्नृ(४)तवाक्स्र(७)ष्टु - र्वि(१)ससर्जो(४)र्जितश्रि(७)यम् ॥

---

१. 'प्रयोगा' इति लि. पुस्तके. २. एते विपुलाभेदाश्छन्द कौस्तुभादौ नोपलभ्यन्ते.

तृतीयेपादे—[1]

ल रगण भगण गु गु भगणः भगणः गु
| — S | S — | S — S S — | S — | | — ऽ
अ(१)द्रूप(४)सिनी सि(७)द्धि रा(१)जन्विग(४)णयात्म(७)न ।

ल रगण मगण गु गु भगणः भगण गु
| — S | S — S S S — S S — | | — | |
उ(१)दस्थिते(४)म कल्या(७)णी ना(१)स्ति कीर्ति(४)त एन(७)मत् ॥

गु मगणः भगणः गु गु भगण भगण गु
S — S — | S — S — ऽ ऽ — | S | — S
स्वा(१)म्यस्त्यागो(४)ऽपिर्वदे(७)द्या प (१)रघुः प्राग्य(४)द्यासि(७)न ।

ल रगणः भगणः गु गु भगण भगण गु
| — S | S — S S — — | S | | — ऽ
अ(१)नन्यजा(४)नेस्तस्या(७)सीत् सै(१)व जाया(४)हिरण्म(७)यी ॥[2]

सैकारेणा(॥S)पि क्वचिद्विपुला दृश्यते । यथा—[3]

ल रगणः भगण गु ल तगणः भगणः गु
| — S | | — | S — S | — | | | —
जि(१)ते तुँ ल(४) मते ल(७)क्ष्मी शू(१)ते चोपि(४)परास्र(७)ना ।[4]

ल भगण रगणः गु गु तगण भगण गु
| — | S S — | | — S ऽ ऽ | — | S | — S
स(१)ममिव्य(४)सिनि का(७)ये का(१)चिन्ता म(४)रणे र(७)णे ॥

[5]सकीभाव विपुलाप्रकारा दृश्यन्ते । तथा च भारविणोक्तम्—[6]

ल भगणः मगणः गु ल भगण भगण गु
| — S S S | | | — S | — | S — | S | — ऽ
क(१)चित्काले(४)प्रसर(७)ता क(१)चिदाप(४)स्य विघ्न(७)ता ।

ल रगण भगण गु ल भगणः भगणः गु
| — S | S — S | | — S | — S S | S | — S
छु(१)नेव सा(४)रमाक्र(७)न्त स्व(१)मा भिन्न(४)द्रियां य(७)स्मृ ॥[7]

---

१ 'तृतीये पादे' इति लि पुस्तके अनन्यजानेर्मसासीत्' इति लि पुस्तके. अनन्यजानेः सैवासीद् यस्माज्जाया' इति मुद्रिते रघुवंशे २ — ३ 'यकारेण' इति लि पुस्तके एते विपुलाभेदाश्छन्दःकौस्तुभादौ नोपलभ्यन्ते ४ 'च' इति लि पुस्तके ५ 'भृशेनापि सुराङ्गना' इति लि पुस्तके ६ भेदा इति लि पुस्तके ७ 'कुसुमम्' इति क पु

इत्यादयो विपुलाविकल्पा संकीर्णाश्च कोटिशः[1] काव्येषु दृश्यन्ते। सर्वासां विपुलानां चतुर्थो[2] वर्णः प्रायेण गुरुर्भवतीत्याम्नायः॥

अतः[3] परं विषमवृत्तान्याह—

## प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्ध्वम्[4]।५।२०॥

चतुर्णामक्षराणां वृद्धिश्चतुर्वृद्धिः। अनुष्टुभः पादादूर्ध्वं प्रतिपादं चतुरक्षरवृद्ध्या यद्वृत्तं निष्पद्यते तत् 'पदचतुरूर्ध्वं' नाम। तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८.
त[5] स्या क टा क्ष वि क्षे पै

१ २. ३ ४ ५ ६ ७ ८ ९ १० ११ १२
क म्पि त त नु[6] कु टि लै र ति दी र्घैः।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६.
त क्ष क द ष्ट इ वे न्द्रि य शू न्य क्ष त चै त न्य

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०.
प द च तु रू र्ध्वं न च ल ति पु रु ष प त ति स ह सै व॥

अत्र गुरुलघुविभागो नेष्यते॥

## गावन्त आपीडः[7]।५।२१॥

गकारौ[8](ऽऽ) द्वावन्ते चेद्भवतश्चतुर्णामपि पादानां तत् पदचतुरूर्ध्वं 'आपीड'संज्ञकं[9] भवति। अन्ते गुरुद्वयग्रहणादत्र शेषाणां लघुत्वमभ्यनुज्ञातं सूत्रकारेणेति मन्यामहे। तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
।–।–।–।–।–।–ऽ–ऽ
कु सु मि त स ह का रे

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
।–।–।–।–।–।–।–।–।–।–ऽ–ऽ
ह[10] त हि म म हि म शु चि श शा ङ्के।

---

१. 'अनुकोटिशः' इति क पुस्तके. २. 'चतुर्थ' इति लि. पु. नास्ति. ३. एषावतरणिका क पुस्तके नास्ति. ४. 'आद्यः पादोऽष्टभिर्वर्णैस्ततोऽन्ये चतुरक्षरैः क्रमाद्वृद्धाः। पादा यस्य द्वितीयाद्याः षट्पञ्चाशद्वर्णा यत्र तदिह विबुधजनैरुक्तं **पदचतुरूर्ध्वं** नाम वृत्तम्॥' इति छन्दःकौस्तुभकारः. ५. 'यस्याः' इति लि. पुस्तके. ६. 'क्षयिततनु' इति लि. पुस्तके. ७. '**आपीड** इदमेवान्त्यौ वर्णौ चेद्गौ' इति छन्दःकौस्तुभकारः. ८. 'चतुर्णामपि पादानामन्ते द्वौ गकारौ भवतः' इति लि. पुस्तके. ९. 'आपीडसंज्ञं' इति लि. पुस्तके. १०. 'हित' इति लि. पुस्तके.

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
।–।–।–।–।–।–।–।–।–।–।–।–।–।–ऽ–ऽ
मि ल सि त क म ल स र सि म धु स म ये ऽस्मिन्

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–। ।–ऽ–ऽ
प्र च स सि प थि क ह त क म दि म म ति स व थि प सि ॥

## गावादौ चेत्प्रत्यापीडः ।५।२२॥

गकारौ(ऽऽ) द्वावादौ चेद्भवतश्चतुर्णामपि पादानां तदा तत् पदचतुरूर्ध्वं 'प्रत्यापीड'-संज्ञं भवति । अत्रापि पूर्ववच्छेषाणां लघुत्वमेव । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ– –।–।–।–।– ।–।
वि त म म र म य ति

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
ऽ–ऽ–।–।–।–।–।–।–।–।–।–।
का न्त व न मि व मु प गि रि न दि।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
ऽ–ऽ–।–।–।–।–।–।–।–।–।–।–।–।–।–।
कू ज न्म धु क र के ळ र व कृ त ज न धु ति

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
ऽ–ऽ–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।
पुं स्को कि ल मु ख रि त सु र भि कु सु म चि त त रु त ति॥

## प्रत्यापीडो गावादौ च ।५।२३॥

चकारोऽन्त इति समुच्चयार्थः । तस्यैव पदचतुरूर्ध्वसंज्ञस्य आदौ च यदि गकारौ(ऽऽ) भवतस्तदा 'प्रत्यापीड' एव भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
ऽ–ऽ–।–।–।–।–ऽ–ऽ
का न्ता म म न स रो ष

---

१ अयं भेदश्छन्दःकौस्तुभ-वृत्तरत्नाकरादिषु नोपलभ्यते २ 'द्वौ पादादौ' इति लि पुस्तके ३–४ 'अपि' इति लि पुस्तके नास्ति ५. कुसुमकलरवकृतयति इति लि पुस्तके ६ अयं भेदश्छन्दःकौस्तुभ-वृत्तरत्नाकरादिषु नोपलभ्यते ७ 'तदापि' इति लि पुस्तके ८ 'एव' इति लि पुस्तके नास्ति ९ 'तस्य' इति लि पुस्तके

१ २ ३ ४ ५ ६ ७ ८ ९ १०. ११ १२
ऽ-ऽ-।-।-।-।-।-।-।-।-ऽ-ऽ
हृ द्यं घ न सु र भि म धु र सा द्यम्।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
ऽ-ऽ-।-।-।-।-।-।-।-।-।-।-।-।-ऽ-ऽ
पा तुं र ह सि स त त म भि ल प ति म नो मे
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०.
ऽ-ऽ-।-।-।-।-।-।-।-।-।-।-।-।-।-।-।-।-ऽ-ऽ
किं चि न्मु कु लि त न य न म ति तं र म णि त र म णी यम्॥

तदेवं द्विप्रकार प्रत्यापीडो भवति॥

## प्रथमस्य विपर्यासे मञ्जरीलवल्यमृतधाराः[३]। ५। २४॥

आपीडग्रहणं निवृत्तम्। तेनैव समं लघ्वक्षराभ्यनुज्ञानं च। तदेव पैदचतुरूर्ध्वं[४] प्रथमस्य[५] विपर्यासे मञ्जरी-लवली-अमृतधाराभिधानं भवति[५]। प्रथमस्य पादस्य द्वितीयेन[६] विपर्यासे 'मञ्जरी'। प्रथमस्य तृतीयेन विपर्यासे 'लवली'। प्रथमस्य चतुर्थेन विपर्यासे 'अमृतधारा'॥

तत्र मञ्जर्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
ज न य ति म ह तीं प्री तिं हृ द ये
१ २ ३ ४ ५ ६ ७ ८
का मि ना चू त म ञ्ज री।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२. १३ १४ १५. १६.
मि ल द लि च क्र च ञ्चु प रि चु म्बि त के स रा
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६. १७ १८ १९. २०.
को म ल म ल य वा त प रि न र्ति त त रु शि ख रैं[७] स्थि ता॥

लवल्युदाहरणम्—

१. २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४. १५ १६.
वि र ह वि धु र हू ण का ङ्ग ना क पो लो प मं
१ २ ३. ४ ५. ६ ७ ८ ९. १० ११. १२
[८]प रि ण ति ध र पी त पा ण्डु च्छ वि।

---

१. 'अविरत' इति क पुस्तके. २. 'कलिका' इति नामान्तर छन्द कौस्तुभवृत्तरत्नाकरादौ ३. 'अथादिना। क्रमात्पादेन चेत्पादा द्वितीयाद्यास्त्रयस्तदा। कलिका लवली प्रोक्तामृतधारा च सूरिभि॥' इति छन्द कौस्तुभकार. ४. 'तत्पदचतुरूर्ध्वं' इति लि. पुस्तके ५. 'प्रथमस्य–भवति' इति लि पुस्तके नास्ति. ६. 'प्रथमस्य द्वितीयस्य' इति लि पुस्तके ७. 'शिरसि' इति लि पुस्तके. ८. 'कपोलावदातपरिणति अल्पपीतपाण्डुच्छवि' इति लि पुस्तके.

१ २ ३ ४ ५ ६ ७ ८
ठ प सी फ स नि दा पे

　१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९
　मे य ति ज ग ति हि म क र धी त ल म ति सा द्रू ण ह रम् ॥

अमृतधारोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९
प रि पा ण्ड सि प र्ण र सा य में स स त म गृ त धा रा भि

　१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
　य ण्हि हृ दि वा प र मा न न्द र सम् ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
चे त श्र गु ध र णी ध र धा नी म गृ त म यीं

　१ २ ३ ४ ५ ६ ७ ८
　त रङ्ग म्य गु ण भू प णम् ॥

केचिदापीडादिष्वपि पादविपर्यासे सति मञ्जर्यादिनामानीच्छन्ति ॥

इति पदचतुरूर्ध्वाधिकारः ।

उद्गतामेकतः सजौ स्लौ, न्सौ ज्गौ, भ्नौ ज्लौ ग्, स्जौ स्जौ ग् । ५ । २५ ॥

'पाद–' (पि॰सू॰५।९) इति प्रकृतमनुवर्तते । यत्र प्रथमे पादे सकार(ऽऽ)जकार(।ऽ।)सकार(।।ऽ)ल(।)कारैर्दशाक्षराणि भवन्ति, द्वितीये पादे नकार(।।।)सकार(।।ऽ)जकार(।ऽ।)ग(ऽ)कारैर्दश एव तृतीये पादे भकार(ऽ।।)नकार(।।।)जकार(।ऽ।)लकार(।)ग(ऽ)कारैरेकादश एव चतुर्थे पादे सकार(।।ऽ)जकार(।ऽ।)सकार(।।ऽ)जकार(।ऽ।)ग(ऽ)कारैस्त्रयोदश एवं, तद्वृत्तम् 'उद्गता' नाम । तत्रोदाहरणम्—

सगण　जगण　सगण　ल
। । ऽ—।　।—। ।　।
मृ–ग–लो–च–ना श–शि–मु–खी च
(१)-(२)-(३)-(४)-(५)-(६)-(७)-(८) (९)-(१०)

---

१ जयति हिमदीतस खण्डवत्स्वादु तृष्णाम(ह)रं सुन्दरम्' इति लि पुस्तके
२ 'यदि' इति लि पुस्तके　३ 'प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे । यद्यथ भनजलगाः स्युरथो सजसा जगौ प्रभवतीयमुद्गता ॥', 'प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे । यद्यथ च भनभगाः स्युरथो सजसा जगौ भवतीयमुद्गता ॥ इति प्रा॰ पि॰ सू॰ २।१२४, १२२ एवं च प्राकृतपिङ्गले लक्षणद्वयमुक्तमुद्गतायाः
४ 'एव' इति लि पुस्तके नास्ति

नगण सगणः जगणः गु०
। । ।—। • । S । S ।—S
रु–चि–र–द–श–ना नि–त–म्बि–नी ।
(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०)

भगण नगण जगण ल० गु०
S । ।—। । ।—। S ।—।—S
हं–स–ल—लि–त–ग—म–ना ल—ल–ना
(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११)

सगण जगण सगणः जगण गु०
। । S—। S ।—। • । • S—। S ।—S
प–रि–णी—य–ते य—दि भ–वे—त्कु–लो–द्र—ता ॥
(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११) (१२) (१३)

यत्र सूत्रे गकारो(S) लकारो(।) वा श्रूयते, तत्र तेनैव वृत्तस्य पाद परिसमाप्यते 'उद्गताम्' इति कर्मविभक्तिश्रवणात् पठेदित्यध्याहार्यम् । 'एकत' इति प्रथमं पाद द्वितीयेन सहाविलम्वेन पठेदित्यर्थ । 'उपस्थितप्रचुपितं पृथगाद्यम्'(पि०सू०५।२८) इत्यतः ।सिंहावलोकितन्यायेन 'आद्य'ग्रहणमनुवर्तनीयम् । तेनाद्यमेव पादमेकत पठेत् । 'एकत.' इति ल्यब्लोपे पञ्चमी ॥

## तृतीयस्य सौरभकं र्नौ भ्गौ । ५ । २६ ॥

'तृतीयस्य' इति ग्रहणात्तस्या उद्गताया एवान्ये त्रयः पादा गृह्यन्ते । तृतीयपादे तु विशेष । तृतीये पादे रेफ(S।S)नकार(।।।)भकार(S।।)ग(S)कारैर्दशाक्षराणि भवन्ति तत् 'सौरभकं' नाम । तत्रोदाहरणम्—

सगण जगण सगण ल० नगण सगण जगण गु०
। । S—। S । । । S—। । । • । । । S—। S ।—S
वि–नि–वा–रि–तोऽपि न–य–ने– न त–द–पि कि–मि–हा–ग–तो भ–वान् ।
(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (१) (२) (३) (४) (५) (६) (७) (८) (९) (१०)
रगण नगण भगण गु० सगण जगण सगण जगण गु०
S । S—। । । S । । S । । S—। S ।—। । S—। S • ।—S
ए–त–दे–व त–व सौ–र–भ–कं य–दु–दी–रि–ता–र्थ–म–पि ना–व–बु–ध्य–ते ।
(१)(२)(३)(४)(५)(६)(७) (८)(९)(१०) (१) (२) ( ) (४) (५) (६) (७) (८)(९)(१०)(११)(१२)(१३)

---

१ 'त्रयमुद्गतासदृशमेव पदमिह तृतीयमन्यथा । जायते रनभगैर्ग्रथितं कथयन्ति सौरभकमेतदीदृशम् ॥' इति प्रा० पि० सू० २।३२७. २. 'एव' इति लि पुस्तके नास्ति ३ 'उद्गताया यदा तृतीयपादे रगणनगणभगण [।], इत्येते भवन्ति तदा 'सौरभकं' नाम' इति लि. पुस्तके.

## ललितं नौ सौ । ५ । २७ ॥

तस्या एव उद्गतायास्तृतीयपादस्थाने यदा नौ(।।। ।।।)सौ(।।ऽ ।।ऽ) भवतस्तदा 'ललितं' नाम वृत्तम् । तत्रोदाहरणम्—

नगणः　नगणः　सगणः　गु
। । ऽ । ।—। ।　—।
स-र-स प्रि-य-म-द-म—नू—नै
(१)(२)(३)(४)(५)(६)(७)(८) (९) (१०)

नगणः　सगणः　जगणः　गु
। । ।—। । ऽ । ऽ ।—
म-म-ल—हृ-द-यं गु—णो-त्त-रम् ।
(१)(२)(३) (४)(५)(६)(७)(८)(९)(१०)

नगणः　नगणः　नगणः　सगणः
। । ।—। । ।—। । ऽ—। ।
मु-ल-लि-त-म-ति-क-म-नी-य-त-नु
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

नगणः　जगणः　नगणः　यगणः　गु
। ।　।　।　। । ऽ—।　।—
पु-रु-प्र ल-ज-न्ति न तु आ-त्र यो-पि-त ॥
(१)(२)(३) (४)(५) (६) (७)(८)(९)(१० )(११)(१२)(१३)

## उपस्थितप्रचुपितं पृथगाद्य म्सौ ज्भौ गौ, स्नौ ज्रौ ग्, नौ स्, नौ न् ज्यौ । ५ । २८ ॥

यत्र प्रथमे पादे मकार(ऽऽऽ)सकार(।।ऽ)जकार(।ऽ।)भकारा(ऽ।।) गकारौ (ऽऽ) च भवत, द्वितीये पादे सकार(।।ऽ)नकार(।।।)जकार(।ऽ।)रेफा(ऽ।ऽ) गकार(ऽ)श्च, तृतीये नकारौ(।।। ।।।)सकार(।।ऽ)श्च, चतुर्थे त्रयो नकारा(।।। ।।। ।।।) जकार(।ऽ।)यकारौ(।ऽऽ) च तत् 'उपस्थितप्रचुपितं' नाम वृत्तं भवति । तत्रोदाहरणम्—

---

१ नयुग सकारयुगलं च भवति चरणे तृतीयके । तदुदीरितमुरुमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्गता ॥' इति प्रा० पि० सू० २।१२९
२ तस्यैवोद्गतातृतीयपादस्य स्थाने यदा नौ सौ भवतस्तदा ललितं नाम छन्दः' इति लि पुस्तके　३ 'उदारं' इति लि पुस्तके　४ 'गुणोपेतं' इति लि पुस्तके
५. म्सौ ज्भौ गौ प्रथमाङ्घ्रिरीक्ष्यते खलु यस्मिंस्तितय सनजरगास्तथा नौ स । अथ नननयुतजय प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ इति छन्दःकौस्तुभकार
६ यत्र प्रथमे पादे मगणसगणजगणभगण [।] गकारौ च भवत, द्वितीये पादे सगणनगणजगण[र] गण [।] न (ग)कारश्च तृतीये नगणौ सगणश्च, चतुर्थे त्रयो नगणा जगणयगणौ च तदुपस्थितप्रचुपितं नाम वृत्तं भवति' इति लि पुस्तके
७ 'पादे' इति क पुस्तके नास्ति

मगण सगणः जगणः भगणः गु० गु०

ऽ ऽ ऽ — । । ऽ — । ऽ । — ऽ । । — ऽ — ऽ

रा–मा का—म–क–रे—णु–का मृ—गा–य– त—ने—त्रा

(१) (२) (३) (४)(५)(६) (७)(८) (९) (१०)(११)(१२) (१३) (१४)

सगण नगणः जगणः रगण- गु०

। । ऽ । । । । ऽ । — ऽ । ऽ — ऽ

हृ–द–यं ह–र–ति प–यो–ध—रा– व– न—म्रा ।

(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)(१२)(१३)

नगण नगण सगणः

। । । — । । । — । । ऽ

इ–य–म—ति–श–य—सु–भ–गा

(१)(२)(३) (४)(५) (६) (७)(८)(९)

नगणः नगण नगण जगण यगण

। । । — । । । — । । । — । ऽ । — । ऽ ऽ

व–हु–वि—ध–नि–धु—व–न–कु—श–ला ल—लि ता ङ्गी ॥

(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)(१२) (१३)(१४)(१५)

'पृथगाद्यम्' इति उद्गतामेकतः पठेत्' (पि० सू० ५।२५) इत्यनुवृत्तिनिरासार्थम्[1] । अत्र तृतीयपादव्यवस्था सकारस्य विभज्य पाठलिङ्गात् ॥

## वर्द्धमानं नौ स्नौ न्सौ । ५ । २९ ॥

'तृतीयस्य' (पि० सू० ५।२६) इत्यनुवर्तते । तस्मिन्नुपस्थितप्रचुपिते तृतीयस्य पादस्य स्थाने यदा नकारौ (।।। ।।।)सकार(।।ऽ)नकारौ(।।।)पुनर्नकार(।।।)सकारौ(ऽ।।) च भवतस्तदा 'वर्द्धमान' नाम वृत्तं भवति । तत्रोदाहरणम्—

मगण सगण जगण भगण गु० गु०

ऽ ऽ ऽ । । ऽ । ऽ । ऽ । ऽ ऽ ऽ

बिम्बोष्ठी क–ठि–नो—न्न–त–स्त—ना– व– न—ता–ङ्गी

(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)(१२) (१३)(१४)

सगण नगण जगण रगण गु०

। । ऽ — । । । — । ऽ । — ऽ । ऽ — ऽ

ह–रि–णी—शि–शु–न—य–ना नि—त–म्ब–गु—र्वी ।

(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)(१२)(१३)

---

१ 'शङ्कानिरासार्थम्' इति लि पुस्तके २ 'स्नौ' इति सूत्रस्थपाठदेहे नकारात्सकारं दूरीकृत्येत्यर्थ ३ 'वर्द्धमानं तृतीयश्चेन्नसैर्नसैरिह' इति छन्द कौस्तुभकार. ४. 'तृतीयस्येति वर्तते ।' इति लि पुस्तके ५ लिखितपुस्तके सर्वत्रापि 'नगणौ सगणनगणौ' इत्यादि ६ 'पुन.' इति लि पुस्तके नास्ति.

नगण। नगण। नगण। नगण। नगण। भगण।

। । ।—। । ।—। । ऽ । । ।—। । ।—। । ऽ

म–द–क–ल–क–रि—ण–म–ना प–रि–ण—त–श–शि–ष द ना

(१)(२)(३) (४)(५)(६) (७)( )(९)(१ )(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)

नगण। नगण। नगण। नगण। यगण।

। । ।—। । । । । । ।—। ऽ ऽ

ज–न–य—ति म–म म–न–सि मु–द म—दि–रा–क्षी ॥

(१)(२)(३) (४)(५)(६)(७)(८)(९)(१ )(११)(१२) (१३)(१४)(१५)

## शुद्धविराड्पम तजरा । ५ । ३० ॥

तस्मिमेव उपस्थितप्रचुपिते यदा तृतीयस्य पादस्य स्थाने तकार(ऽऽ।)जकार(।ऽ।)-रेफा(ऽ।ऽ) भवन्ति तदा 'शुद्धविराड्पभ' नाम वृत्त भवति । तत्रोदाहरणम्—

मगण। सगण जगण। भगण गु गु

ऽ ऽ ऽ । । ऽ— । ऽ ।—ऽ । ।—ऽ

क–न्ये–य क–न–को–ज्ज्व–ला म—नो–ह–र—दी सि

(१)(२)(३)(४)(५)(६) (७)(८) (९) (१ )(११)(१२)(१३)(१४)

सगण। नगण जगण रगण गु

। । ऽ—। । ।—। ऽ ।—ऽ । ऽ—ऽ

श–शि–नि—र्म–ल–म—द–ना वि—शा–ल–ने–त्रा ।

(१)(२) (३) (४)(५)(६) (७)(८)(९) (१ )(११)(१२)(१३)

तगण। जगण। रगण

ऽ ऽ ।— । ऽ । — ऽ । ऽ

पी–नो–रु—नि–त–म्ब—शा–लि–नी

(१)(२) (३) (४)(५)(६) (७)( ) (९)

नगण नगण। नगण नगण जगण।

। । ।—। । ।—। । ।—। ऽ ।—। ऽ ऽ

सु–ख–य—ति हृ–द—य–म–ति—श–य त—रु–णा–नाम् ॥

(१)(२)(३) (४)(५)(६) (७)(८)(९) (१ )(११)(१२)(१३)(१४)(१५)

उपस्थितप्रचुपितादीनामस्मि प्रवेशयितु न शक्यन्ते संज्ञा, इति नोक्ताः ॥

## अर्द्धे । ५ । ३१ ॥

पूर्वमुभयचारीणि छन्दांस्युक्तानि । इदानीं नियमेनोच्यन्ते । 'अर्द्धे' इत्यधिकारोऽयमाध्यायपरिसमाप्ते । यदित ऊर्ध्वमनुक्रमिष्याम, अर्द्धे एव तद्वेदितव्यम् ॥

---

१ 'तजरैस्तु शुद्धविराजपभम्' इति छन्द कौस्तुभकार २ 'अस्मिमेव' इति खि पुस्तके ३ पादस्य' इति खि पुस्तके नास्ति ४ तगण ज[ग]ण रगणा' इति खि पुस्तके

